# ॥ जयादि होमः (उत्तरांगम्) ॥

एतत् कर्म–समृद्ध्यर्थं जयादि होमं करिष्ये ॥

चित्तं च स्वाहा । चित्तायेदं न मम ॥ १ ॥

चित्तिश्च स्वाहा । चित्त्या इदं न मम ॥ २ ॥

आकूतं च स्वाहा । आकूतायेदं ॥ ३ ॥

आकूतिश्च स्वाहा । आकूत्या इदं ॥ ४ ॥

विज्ञातं च स्वाहा । विज्ञातायेदं ॥ ५ ॥

विज्ञानं च स्वाहा । विज्ञानायेदं ॥ ६ ॥

मनश्च स्वाहा । मनस इदं ॥ ७ ॥

शक्करीश्च स्वाहा । शक्करीभ्य इदं ॥ ८ ॥

दर्शश्च स्वाहा । दर्शायेदं ॥ ९ ॥

पूर्णमासश्च स्वाहा । पूर्णमासायेदं ॥ १० ॥

बृहच्च स्वाहा । बृहत इदं ॥ ११ ॥

रथन्तरं च स्वाहा । रथन्तरायेदं ॥ १२ ॥

प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छ–दुग्रः पृतनाज्येषु । तस्मै विशस्समनमन्त सर्वाः
स उग्रस्स हि हव्यो बभूव स्वाहा । प्रजापतय इदं न मम ॥ १३ ॥

अग्निर्भूताना–मधिपति–स्स मावत्वस्मिन् ब्रहन्नस्मिन् क्षत्रे ऽत्या–माशिष्यस्यां पुरोधाया–मस्मिन् कर्मन्नस्यां देवहूत्या॒ स्वाहा । अग्नय इदं ॥ १४ ॥

इन्द्रो ज्येष्ठाना–मधिपति–स्स माऽवतु .... स्वाहा । इन्द्रायेदम् ॥ १५ ॥

यमः पृथिव्या अधिपति–स्समाऽवतु.... स्वाहा । यमांयेदम् ॥ १६ ॥

वायुरन्तरिक्षस्याधिपतिः .... स्वाहा । वायव इदम् ॥ १७ ॥

सूर्यो दिवोऽधिपतिः .... स्वाहा । सूर्यायेदम् ॥ १८ ॥

चन्द्रमा नक्षत्राणामधिपतिः .... स्वाहा । चन्द्रमस इदम् ॥ १९ ॥

बृहस्पतिर्ब्रह्मणोऽधिपतिः .... स्वाहा । बृहस्पतय इदम् ॥ २० ॥

मित्रस्सत्यानामधिपतिः .... स्वाहा । मित्रायेदम् ॥ २१ ॥

वरुणोऽपामधिपतिः .... स्वाहा । वरुणायेदम् ॥ २२ ॥

सम्द्रस्स्रोत्यानामधिपतिः .... स्वाहा । समुद्रायेदम् ॥ २३ ॥

अन्न॒साम्राज्यानामधिपति तन्मावतु .... स्वाहा । अन्नायेदम् ॥ २४ ॥

सोम ओषधीनामधिपतिस्स मावतु .... स्वाहा । सोमायेदं न मम ॥ २५ ॥

सविता प्रसवानामधिपतिः .... स्वाहा । सवित्र इदम् ॥ २६ ॥

रुद्रः पशूनामधिपतिः .... स्वाहा । रुद्रायेदम् ॥ २७ ॥

**(अप उपस्पृश्य)**

त्वष्टा रूपाणा–मधिपतिः स्वाहा । त्वष्ट्र इदम् ॥ २८ ॥

विष्णुः पर्वतानामधिपतिः .... स्वाहा । विष्णव इदम् ॥ २९ ॥

मरुतो गणानामधिपतयस्ते मावन्तु .... स्वाहा । मरुद्भ्य इदम् ॥ ३० ॥
पितरः पितामहाः परेऽवरे ततास्तततामहा इहमावत । अस्मिन् ब्रह्मन्नस्मिन् क्षत्रे ऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याँ स्वाहा । पितृभ्य इदम् ॥ ३१ ॥

(अप उपस्पृश्य)

ऋताषाड् ऋतधामाग्नि–र्गन्धर्वस्तस्योषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता एदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । अग्नये गन्धर्वायेदम् ॥ ३२ ॥
ताभ्यः स्वाहा । ओषधीभ्योऽप्सरोभ्य इदम् ॥ ३३ ॥
संहितो विश्वसामा सूर्यो गन्धर्व–स्तस्य मरीचयोऽप्सरस आयुवो नाम ..... स्वाहा । सूर्याय गन्धर्वाय इदम् ॥ ३४ ॥
ताभ्यः स्वाहा । मरीचिभ्योऽप्सरोभ्य इदम् ॥ ३५ ॥
सुषुम्नः सूर्यरश्मि–श्चन्द्रमा गन्धर्व–स्तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम .... स्वाहा । चन्द्रमसे गन्धर्वायेदम् ॥ ३६ ॥
ताभ्यः स्वाहा । नक्षत्रेभ्योऽप्सरोभ्य इदम् ॥ ३७ ॥
भुज्युस्सुपर्णो यज्ञो गन्धर्व–स्तस्य दक्षिणा अप्सरसःस्तवा नाम .... स्वाहा ॥ यज्ञाय गन्धर्वायेदम् ॥ ३८ ॥
ताभ्यः स्वाहा । दक्षिणाभ्योऽप्सरोभ्य इदम् ॥ ३९ ॥

प्रजापति–र्विश्वकर्मा मनो गन्धर्व–स्तस्यकर्सामान्यप्सरसो वह्नयो नाम .... स्वाहा ।
मनसे गन्धर्वायेदम् ॥ ४० ॥

ताभ्यः स्वाहा । ऋक्सामेभ्योऽप्सरोभ्य इदम् ॥ ४१ ॥

इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा नाम .... स्वाहा । वाताय गन्धर्वायेदम् ॥ ४२ ॥

ताभ्यः स्वाहा । अद्भ्योऽप्सरोभ्य इदम् ॥ ४३ ॥

भुवनस्य पते यस्य त उपरि गृहा इह च । स नो राश्वा–
ज्यानि॑ रायस्पोष॑ सुवीर्य॑ संवत्सरीणा॑ स्वस्ति॑ स्वाहा । भुवनस्य पत्य इदम् ॥ ४४ ॥

परमेष्ठ्यधिपति–र्मृत्युर्गन्धर्व स्तस्य विश्वमप्सरसो भुवो नाम .... स्वाहा । मृत्यवे गन्धर्वायेदम् ॥ ४५ ॥

ताभ्यः स्वाहा । विश्वस्मा अप्सरोभ्य इदम् ॥ ४६ ॥

सुक्षिति–स्सुभूति–र्भद्रकृत्सुवर्वान् पर्जन्यो गन्धर्व–स्तस्य विद्युतो–ऽप्सरसो रुचो नाम.... स्वाहा । पर्जन्याय गन्धर्वायेदम् ॥ ४७ ॥

ताभ्य स्वाहा । विद्युद्भ्योऽप्सरोभ्य इदम् ॥ ४८ ॥

दूरेहेति–रमृडयो मृत्यु–र्गन्धर्व–स्तस्य प्रजा अप्सरसो भीरुवो नाम .... स्वाहा ।
मृत्युवे गन्धर्वायेदम् ॥ ४९ ॥

ताभ्यः स्वाहा । प्रजाभ्योऽप्सरोभ्य इदम् ॥ ५० ॥

चारुः कृपणकाशी कामो गन्धर्व–स्तस्याधयोऽप्सरसश्शोचयन्ती–र्नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा । कामाय गन्धर्वायेदम् ॥ ५१ ॥

ताभ्यः स्वाहा । आधिभ्योऽप्सरोभ्य इदम् ॥ ५२ ॥
स नो भुवनस्य पते यस्य त उपरि गृहा इह च । ऊरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा । भुवनस्य पत्ये ब्रह्मण इदम् ॥ ५३ ॥

**उत्तराङ्गम् ॥**

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳस्याम पतयो रयीणाꣳ स्वाहा । प्रजापतय इदम् ॥ ५४ ॥
भूस्स्वाहा । अग्नय इदम् ॥ ५५ ॥
भुवस्स्वाहा । वायव इदम् ॥ ५६ ॥
सुवस्स्वाहा । सूर्यायेदम् ॥ ५७ ॥
यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्ट कृद्विद्वान् सर्वꣳस्विष्टꣳसुहुतं करोतु स्वाहा । अग्नये स्विष्टकृत इदम् ॥ ५८ ॥
*परिध्यंजनम् । परिधिप्रहरणम् । मध्यमं परिधिमग्नौ प्रहृत्य, अन्यौ प्रहरन् । दर्वीद्वयेन संस्रावं जुहोति (स्वाहा) । वसुभ्यो रुद्रेभ्य आदित्येभ्यः सँस्राव भागेभ्य इदम् ॥ ५९ ॥
ओं भूर्भुवस्सुवः स्वाहा । प्रजापतय इदम् ॥ ६० ॥